# चम्पूरामायणे

# बालकाण्डम्

०८ – १८.१२.२०१७

vyoma
॥ वाचं धेनुमुपासीत ॥
Saṃskṛtam • Value Education • Technology



vyoma
॥ वाचं धेनुमुपासीत ॥
Samskrtam · Value Education · Technology

# पुनरावर्तनम्

- तदनु हविराहरणाय - इन्द्रादयो देवाः ब्रह्माणं पुरस्कृत्य वैकुण्ठं गच्छन्ति
- सन्तापघ्नम् – कालमेघसदृशस्य महाविष्णोः वर्णनम्
- क्षीराम्भोधेः – नीलकायस्य, योगनिद्रानिलीनस्य महाविष्णोः वर्णनम्

vyoma
॥ वाचं धेनुमुपासीत ॥
Samskritam · Value Education · Technology

प्रह्लादस्य व्यसनममितं दैत्यवर्गस्य दम्भम्
स्तम्भं वक्षःस्थलमपि रिपोर्यौगपद्येन भेत्तुम् ।
बद्धश्रद्धं पुरुषवपुषा मिश्रिते विश्वदृष्टे
दंष्ट्रारोचिर्विशदभुवने रंहसा सिंहवेषे ॥ १५ ॥

- नृसिंहावतारस्य वर्णनम्

vyoma ॥ वाचं धेनुमुपासीत ॥
Samskritam - Value Education - Technology

प्रह्लादस्य व्यसनममितं दैत्यवर्गस्य दम्भम् स्तम्भं वक्षःस्थलमपि रिपोर्यौगपद्येन भेत्तुम् ।
बद्धश्रद्धं पुरुषवपुषा मिश्रिते विश्वदृष्टे दंष्ट्रारोचिर्विशदभुवने रंहसा सिंहवेषे ॥ १५ ॥

- प्रह्लादस्य, व्यसनम्, अमितम्, दैत्य-वर्गस्य, दम्भम्, स्तम्भम्, वक्षः-स्थलम्, अपि, रिपोः, यौगपद्येन, भेत्तुम्, बद्ध-श्रद्धम्, पुरुष-वपुषा, मिश्रिते, विश्व-दृष्टे, दंष्ट्रा-रोचिर्-विशद-भुवने, रंहसा, सिंह-वेषे

प्रह्लादस्य व्यसनममितं दैत्यवर्गस्य दम्भम् स्तम्भं वक्षःस्थलमपि रिपोर्यौगपद्येन भेत्तुम् ।
बद्धश्रद्धं पुरुषवपुषा मिश्रिते विश्वदृष्टे दंष्ट्रारोचिर्विशदभुवने रंहसा सिंहवेषे ॥ १५ ॥

- त्रिदशपरिषत् विष्णुं ददर्श ।
- कीदृशं विष्णुम्? बद्धश्रद्धम् = कृतसङ्कल्पम्
- कथं बद्धश्रद्धम्? रंहसा = वेगेन
- कुत्र बद्धश्रद्धम्? सिंहवेषे = कण्ठीरवाकारे

प्रह्लादस्य व्यसनममितं दैत्यवर्गस्य दम्भम् स्तम्भं वक्षःस्थलमपि रिपोर्यौगपद्येन भेत्तुम् ।
बद्धश्रद्धं पुरुषवपुषा मिश्रिते विश्वदृष्टे दंष्ट्रारोचिर्विशदभुवने रंहसा सिंहवेषे ॥ १५ ॥

- कीदृशे सिंहवेषे? पुरुषवपुषा मिश्रिते, विश्वदृष्टे, दंष्ट्रारोचिर्विशदभुवने
- पुरुषवपुषा मिश्रिते = नरशरीरेण मिलिते । नरसिंहावतारे इत्यर्थः ।
- विश्वदृष्टे = सर्वैः (आश्चर्यतया) अवलोकिते
- दंष्ट्राणाम् = खरदन्तानाम्, रोचिषा = कान्त्या, विशदानि = शुभ्राणि, भुवनानि = लोकाः । नृसिंहस्य दन्तकान्त्या सर्वे लोकाः प्रकाशिता इत्यर्थः ।

प्रह्लादस्य व्यसनममितं दैत्यवर्गस्य दम्भम् स्तम्भं वक्षःस्थलमपि रिपोर्यौगपद्येन भेत्तुम् ।
बद्धश्रद्धं पुरुषवपुषा मिश्रिते विश्वदृष्टे दंष्ट्रारोचिर्विशदभुवने रंहसा सिंहवेषे ॥ १५ ॥

- किमर्थं सिंहवेषे बद्धश्रद्धम्? भेत्तुम् = विदारयितुम्
- कथं भेत्तुम्? यौगपद्येन = समकाले
- किं भेत्तुम्? प्रह्लादस्य अमितं व्यसनम्, दैत्यवर्गस्य दम्भम्, स्तम्भम्, रिपोः वक्षःस्थलम् अपि

vyoma ॥ वाचं धेनुमुपासीत ॥
Samskrtam - Value Education - Technology

प्रह्लादस्य व्यसनममितं दैत्यवर्गस्य दम्भम् स्तम्भं वक्षःस्थलमपि रिपोर्यौगपद्येन भेत्तुम् ।
बद्धश्रद्धं पुरुषवपुषा मिश्रिते विश्वदृष्टे दंष्ट्रारोचिर्विशदभुवने रंहसा सिंहवेषे ॥ १५ ॥

- प्रह्लादस्य = हिरण्यकशिपुसुतस्य, अमितम् = अपारम्, व्यसनम् = विपदम्
- दैत्यवर्गस्य = असुरसमूहस्य, दम्भम् = कपटम्
- स्तम्भम् = अयःस्तम्भम्
- रिपोः = शत्रोः हिरण्यकशिपोः, वक्षःस्थलम् = उरःस्थलम्

प्रह्लादस्य व्यसनममितं दैत्यवर्गस्य दम्भम् स्तम्भं वक्षःस्थलमपि रिपोर्यौगपद्येन भेत्तुम् ।
बद्धश्रद्धं पुरुषवपुषा मिश्रिते विश्वदृष्टे दंष्ट्रारोचिर्विशदभुवने रंहसा सिंहवेषे ॥ १५ ॥

- अन्वयः – दंष्ट्रारोचिर्विशदभुवने, विश्वदृष्टे, पुरुषवपुषा मिश्रिते सिंहवेषे प्रह्लादस्य अमितं व्यसनम्, दैत्यवर्गस्य दम्भम्, स्तम्भम्, रिपोः वक्षःस्थलम् अपि यौगपद्येन भेत्तुं रंहसा बद्धश्रद्धं (त्रिदशपरिषत् ददर्श)
- यः विष्णुः दन्तकान्त्या लोकं प्रकाशयन्तं सर्वजनदर्शनीयं नरसिंहवेषं झटिति स्वीकृत्य स्वभक्तस्य प्रह्लादस्य विपदम्, असुराणां कपटम्, अयःस्तम्भम्, शत्रोः वक्षःस्थलं च समकाले विदारितवान्, तादृशं विष्णुं देवाः अपश्यन् ।

प्रह्लादस्य व्यसनममितं दैत्यवर्गस्य दम्भम् स्तम्भं वक्षःस्थलमपि रिपोर्यौगपद्येन भेत्तुम् ।
बद्धश्रद्धं पुरुषवपुषा मिश्रिते विश्वदृष्टे दंष्ट्रारोचिर्विशदभुवने रंहसा सिंहवेषे ॥ १५ ॥

- अमितम् – न मितम् । नञ्तत्पुरुषः ।
- दैत्यवर्गस्य – दैत्यानां वर्गः, तस्य ।
- दम्भम् – अकारान्तः, पुं, २.१ । “कपटोऽस्त्री व्याज-दम्भ-उपधयः छद्म-कैतवे”

vyoma ॥ वाचं धेनुमुपासीत ॥
Samskrtam - Value Education - Technology

प्रह्लादस्य व्यसनममितं दैत्यवर्गस्य दम्भम् स्तम्भं वक्षःस्थलमपि रिपोर्यौगपद्येन भेत्तुम् ।
बद्धश्रद्धं पुरुषवपुषा मिश्रिते विश्वदृष्टे दंष्ट्रारोचिर्विशदभुवने रंहसा सिंहवेषे ॥ १५ ॥

- रिपोः – उकारान्तः, पुं, ६.१ । "रिपौ वैरि-सपत्न-अरि-द्विषद्-द्वेषण-दुर्हृदः"
- यौगपद्येन – युगपद् + भावे ष्यञ् (तद्धितः)। अकारान्तः, नपुं, ३.१
- भेत्तुम् – "भिदिर् विदारणे" + तुमुन् (कृत्) – अव्ययम् ।
- बद्धश्रद्धम् – बद्धा श्रद्धा यस्य सः, तम्

प्रह्लादस्य व्यसनममितं दैत्यवर्गस्य दम्भम् स्तम्भं वक्षःस्थलमपि रिपोर्यौगपद्येन भेत्तुम् ।
बद्धश्रद्धं पुरुषवपुषा मिश्रिते विश्वदृष्टे दंष्ट्रारोचिर्विशदभुवने रंहसा सिंहवेषे ॥ १५ ॥

- पुरुषवपुषा – पुरुषस्य वपुः, तेन । षकारान्तः, नपुं, ३.१
- विश्वदृष्टे – विश्वेन दृष्टः / विश्वैः दृष्टः, तस्मिन्
- दंष्ट्रा... – दंष्ट्राणां रोचिः, दंष्ट्रारोचिषा विशदानि, दंष्ट्रारोचिर्विशदानि भुवनानि यस्य सः, तस्मिन् ।

प्रह्लादस्य व्यसनममितं दैत्यवर्गस्य दम्भम् स्तम्भं वक्षःस्थलमपि रिपोर्यौगपद्येन भेत्तुम् ।
बद्धश्रद्धं पुरुषवपुषा मिश्रिते विश्वदृष्टे दंष्ट्रारोचिर्विशदभुवने रंहसा सिंहवेषे ॥ १५ ॥

- रंहसा – सकारान्तः, नपुं, ३.१
- सिंहवेषे – सिंहस्य वेषः, तस्मिन्
- मन्दाक्रान्ता वृत्तम् ।

Vyoma
॥ वाचं धेनुमुपासीत ॥
Samskrtam - Value Education - Technology

नारायणाय नलिनायतलोचनाय
नामावशेषितमहाबलिवैभवाय ।
नानाचराचरविधायकजन्मदेश-
नाभीपुटाय पुरुषाय नमः परस्मै ॥ १६ ॥

- देवैः कृता भगवतो नारायणस्य स्तुतिः ।

vyoma
॥ वाचं धेनुमुपासीत ॥
Samskritam - Value Education - Technology

नारायणाय नलिनायतलोचनाय नामावशेषितमहाबलिवैभवाय ।
नानाचराचरविधायकजन्मदेश-नाभीपुटाय पुरुषाय नमः परस्मै ॥१६॥

- नारायणाय, नलिन-आयत-लोचनाय, नाम-अवशेषित-महा-बलि-वैभवाय, नाना-चर-अचर-विधायक-जन्म-देश-नाभी-पुटाय, पुरुषाय, नमः, परस्मै
- नमः = अभिवादनम्
- कस्मै नमः? नारायणाय = विष्णवे

vyoma ॥वाचं धेनुमुपासीत॥
Samskritam · Value Education · Technology

नारायणाय नलिनायतलोचनाय नामावशेषितमहाबलिवैभवाय ।
नानाचराचरविधायकजन्मदेश-नाभीपुटाय पुरुषाय नमः परस्मै ॥१६॥

- नलिने = कमले इव, आयते = विशाले, लोचने = नयने यस्य, तादृशाय । पुण्डरीकाक्षाय
- नाम्ना = आख्यामात्रेण, अवशेषितम् = शेषीकृतम्, महत् = भूयिष्ठम्, बलेः = दैत्यचक्रवर्तिनः, वैभवम् = सम्पत् येन तस्मै

vyoma ॥ वाचं धेनुमुपासीत ॥
Samskritam · Value Education · Technology

नारायणाय नलिनायतलोचनाय नामावशेषितमहाबलिवैभवाय ।
नानाचराचरविधायकजन्मदेश-नाभीपुटाय पुरुषाय नमः परस्मै ॥१६॥

- नाना = बहुप्रकारकं, चराचरम् = स्थावरजङ्गमात्मकं जगत्, तस्य विधायकः = सृष्टिकर्ता ब्रह्मा, तस्य जन्मदेशः = उत्पत्तिस्थानम्, नाभीपुटम् = नाभिपद्मकोशं यस्य तस्मै
- परस्मै पुरुषाय = परमात्मने

vyoma ॥वाचं धेनुमुपासीत॥
Samskrtam - Value Education - Technology

# नारायणाय नलिनायतलोचनाय नामावशेषितमहाबलिवैभवाय ।
# नानाचराचरविधायकजन्मदेश-नाभीपुटाय पुरुषाय नमः परस्मै ॥१६॥

- अन्वयः – नारायणाय... परस्मै पुरुषाय नमः
- तात्पर्यम् – नारायणाय, पुण्डरीकविशालनेत्राय, असुरचक्रवर्तिनः बलेः भूयिष्ठां सम्पदं नाममात्रशिष्टां कृतवते, सृष्टिकर्तुः ब्रह्मणः उत्पत्तिस्थानभूतं नाभिकमलं दधते परमात्मने नमः

vyoma ॥ वाचं धेनुमुपासीत ॥
Samskritam · Value Education · Technology

नारायणाय नलिनायतलोचनाय नामावशेषितमहाबलिवैभवाय ।
नानाचराचरविधायकजन्मदेश-नाभीपुटाय पुरुषाय नमः परस्मै ॥१६॥

- नमः – "नमः-स्वस्ति-स्वाहा-स्वधा-अलं-वषड्-योगाच्च" (२.३.१६) इति नमःशब्दयोगे चतुर्थीविभक्तिः
- नलिनायतलोचनाय – नलिने इव आयते नलिनायते, नलिनायते लोचने यस्य सः, तस्मै

# नारायणाय नलिनायतलोचनाय नामावशेषितमहाबलिवैभवाय ।
# नानाचराचरविधायकजन्मदेश-नाभीपुटाय पुरुषाय नमः परस्मै ॥१६॥

- नामा... – नाम्ना अवशेषितम्, बलेः वैभवम्, महत् बलिवैभवम्, नामावशेषितं महाबलिवैभवं येन सः, तस्मै
- नाना.... – चरं च अचरं च, नाना चराचरम्, नानाचराचरस्य विधायकः, जन्मनः देशः, नाना...विधायकस्य जन्मदेशः, नाना...जन्मदेशः नाभीपुटं यस्य सः, तस्मै
- परस्मै – अकारान्तः, सर्वनाम, ४.१

Samskrtam - Value Education - Technology

नारायणाय नलिनायतलोचनाय नामावशेषितमहाबलिवैभवाय ।
नानाचराचरविधायकजन्मदेश-नाभीपुटाय पुरुषाय नमः परस्मै ॥१६॥

- “नतोऽस्म्यहं त्वाऽखिलहेतुभूतं नारायणं पूरुषमाद्यमव्ययम् ।
- यन्नाभिजातादरविन्दकोशाद् ब्रह्माविरासीद् यत एष लोकः ॥”

(भागवतम् १०.४०.१)

- वसन्ततिलकावृत्तम्

इति प्रणम्योत्थितानेतान् स्तुतिरवमुखरितहरिन्मुखान् हरिहयप्रमुखानखिलानमरानरुणारुणतामरसविलासचोरैर्लोचनमरीचि सन्तानैरानन्दयन्नरविन्दलोचनः स्फुटमभाषत ।

- इति, प्रणम्य, उत्थितान्, एतान्, स्तुति-रव-मुखरित-हरित्-मुखान् (अनुनासिकसन्धिः), हरिहय-प्रमुखान्, अखिलान्, अमरान्, अरुण-अरुण-तामरस-विलास-चोरैः, लोचन-मरीचि-सन्तानैः, आनन्दयन्, अरविन्द-लोचनः, स्फुटम्, अभाषत ।

इति प्रणम्योत्थितानेतान् स्तुतिरवमुखरितहरिन्मुखान्
हरिहयप्रमुखानखिलानमरानरुणारुणतामरसविलासचोरैर्लोचनमरीचि
सन्तानैरानन्दयन्नरविन्दलोचनः स्फुटमभाषत ।

- इति = एवंप्रकारेण
- प्रणम्य = साष्टाङ्गप्रणामं कृत्वा
- उत्थितान् = उत्थानं प्राप्तवतः
- एतान् = इमान्

इति प्रणम्योत्थितानेतान् स्तुतिरवमुखरितहरिन्मुखान् हरिहयप्रमुखानखिलानमरानरुणारुणतामरसविलासचोरैर्लोचनमरीचिसन्तानैरानन्दयन्नरविन्दलोचनः स्फुटमभाषत ।

- स्तुतिरव... – स्तुतेः = स्तोत्रस्य, रवेण = ध्वनिना, मुखरितानि = अनुरणितानि, हरिताम् = दिशाम्, मुखानि = प्रदेशाः येषां तान् । देवानां स्तोत्रस्य उच्चध्वनिना सर्वाः दिशः पूरिताः इत्यर्थः
- हरिहयप्रमुखान् = इन्द्रादीन्

इति प्रणम्योत्थितानेतान् स्तुतिरवमुखरितहरिन्मुखान् हरिहयप्रमुखानखिलानमरानरुणारुणतामरसविलासचोरैर्लोचनमरीचिसन्तानैरानन्दयन्नरविन्दलोचनः स्फुटमभाषत ।

- अखिलान् = सर्वान्
- अमरान् = देवान्
- अरुणारुण... – अरुणारुणम् = अत्यन्तलोहितम्, तामरसम् = कमलम्, तस्य विलासचोरैः = सौन्दर्यापहारिभिः । तत्तुल्यैः इत्यर्थः ।

इति प्रणम्योत्थितानेतान् स्तुतिरवमुखरितहरिन्मुखान्
हरिहयप्रमुखानखिलानमरानरुणारुणतामरसविलासचोरैर्लोचनमरीचि
सन्तानैरानन्दयन्नरविन्दलोचनः स्फुटमभाषत ।

- लोचनमरीचिसन्तानैः – लोचनयोः = नेत्रयोः, मरीचीणां = किरणानाम्
  सन्तानैः = समूहैः
- आनन्दयन् = तोषयन्
- अरविन्दलोचनः = राजीवाक्षः

इति प्रणम्योत्थितानेतान् स्तुतिरवमुखरितहरिन्मुखान् हरिहयप्रमुखानखिलानमरानरुणारुणतामरसविलासचोरैर्लोचनमरीचिसन्तानैरानन्दयन्नरविन्दलोचनः स्फुटमभाषत ।

- स्फुटम् = स्पष्टम्
- अभाषत = अब्रवीत्
- “पाणिपादतले रक्ते नेत्रान्तौ च नखास्तथा । तालु-जिह्वा-अधरोष्ठं च सप्तरक्तः सुखी भवेत्” – महाभाग्यलक्षणानि ।

इति प्रणम्योत्थितानेतान् स्तुतिरवमुखरितहरिन्मुखान् हरिहयप्रमुखानखिलानमरानरुणारुणतामरसविलासचोरैर्लोचनमरीचिसन्तानैरानन्दयन्नरविन्दलोचनः स्फुटमभाषत ।

- तात्पर्यम् – इन्द्रादीनां देवानां स्तुतिध्वनिभिः दिशः परिपूर्णाः । ततः एतान् देवान् कमलवत्सुन्दरैः नेत्रप्रभाभिः तोषयन् राजीवाक्षः विष्णुः व्यक्तम् अवोचत् ।

इति प्रणम्योत्थितानेतान् स्तुतिरवमुखरितहरिन्मुखान्
हरिहयप्रमुखानखिलानमरानरुणारुणतामरसविलासचोरैर्लोचनमरीचि
सन्तानैरानन्दयन्नरविन्दलोचनः स्फुटमभाषत ।

- प्रणम्य = “णम प्रह्वत्वे शब्दे च” + ल्यप्, अव्ययम्
- उत्थितान् = उद् + “ष्ठा गतिनिवृत्तौ” + क्त (कृत्) । अकारान्तः, पुं, २.३
- स्तुति... – स्तुतीनां रवः, स्तुतिरवेण मुखरितानि, हरितां मुखानि, स्तुतिरवमुखरितानि हरिन्मुखानि येषां तान्

इति प्रणम्योत्थितानेतान् स्तुतिरवमुखरितहरिन्मुखान् हरिहयप्रमुखानखिलानमरानरुणारुणतामरसविलासचोरैर्लोचनमरीचिसन्तानैरानन्दयन्नरविन्दलोचनः स्फुटमभाषत ।

- हरिहयप्रमुखान् – हरिहयः प्रमुखः येषां तान् । “जम्भभेदी हरिहयः स्वाराट् नमुचिसूदनः” (अमरः)
- अमरान् – “अमरा निर्जरा देवाः त्रिदशा विबुधाः सुराः” (अमरः)
- अरुणा.. – अरुणारुणं तामरसम्, अरुणारुणतामरसस्य विलासः, अरुणा...विलासस्य चोराः, तैः

इति प्रणम्योत्थितानेतान् स्तुतिरवमुखरितहरिन्मुखान् हरिहयप्रमुखानखिलानमरानरुणारुणतामरसविलासचोरैर्लोचनमरीचिसन्तानैरानन्दयन्नरविन्दलोचनः स्फुटमभाषत ।

- लोचन... – लोचनयोः मरीचयः, लोचनमरीचीणां सन्तानाः, तैः। “लोचनं नयनं नेत्रम्” (अमरः), “भानुः करो मरीचिः”
- आनन्दयन् – आ+ “टुनदि समृद्धौ” + णिच् + शतृ (कृत्) – तकारान्तः, पुं, १.१
- अरविन्दलोचनः – अरविन्दे इव लोचने यस्य सः । “वा पुंसि पद्मं नलिनम् अरविन्दं महोत्पलम् । पङ्केरुहं तामरसं सारसं सरसीरुहम्” (अमरः)

इति प्रणम्योत्थितानेतान् स्तुतिरवमुखरितहरिन्मुखान् हरिहयप्रमुखानखिलानमरानरुणारुणतामरसविलासचोरैर्लोचनमरीचिसन्तानैरानन्दयन्नरविन्दलोचनः स्फुटमभाषत ।

- स्फुटम् – "स्पष्टं स्फुटं प्रव्यक्तम् उल्बणम्" (अमरः)
- अभाषत – "भाष व्यक्तायां वाचि" – लङ्, प्रथम.१

# सङ्क्षेपः

- प्रह्लादस्य व्यसनममितम् – नरसिंहावतारस्य वर्णनम्
- नारायणाय – देवैः कृता भगवतः स्तुतिः
- इति प्रणम्योत्थितान् – देवानुद्दिश्य भाषते विष्णुः






QUESTIONS/DOUBTS?

Email us @

sanskritfromhome@vyomalabs.in








- For downloading course-materials, login @ www.sanskritfromhome.in
- Subscribe to our youtube channel @ vyoma-samskrta-pathasala
- Buy our Samskrita-learning products @ www.digitalsanskritguru.com
- Support our cause for Samskrita-Samskriti @ www.vyomalabs.in